## ॥ क्वचित्पूर्व एव ॥४४॥

त्र्यक्षराधिकानां क्वचित्स्थाने पूर्वः अर् प्रत्यय एव भवति॥ अपज़र्। असत्यता॥ क्रूद्दअर्। कार्ण्यम्॥ काव़र्यर्। कपिलता॥ कावर्यर्। नीलता॥ छ्रपअर्। कार्पण्यम्॥ कायर्यर्। असारता॥ खोवर्यर्। वामता॥ ग्यश्याम्यर्। श्यामता॥ च्चत्र्यर्। चतुरता॥ विसम्यर्। विषमता। इत्यादि॥

## ॥ हशो ऽश्लीले ॥४५॥

हश्शब्दादश्लीले ऽर्थे अर् भवति॥ हशर्। गालिदानेन श्वश्रूत्वम्॥ अश्लीले किम्। हशतोनु। श्वश्रूत्वम्॥ (सू० ६३) तोनु प्रत्ययः॥

## ॥ क्रंबुगंशुभ्यां वा लोपः ॥४६॥

आभ्याम् शब्दाभ्यां विकल्पेन भावप्रत्ययलोपः स्यात्॥ क्रब्यर्। कुब्जता॥ गश्यर्। जाल्मता॥ पक्षे। क्रंबु। कुब्जता॥ गंशु। जाल्मता॥

## ॥ कवर्गान्तानां चवर्गादेशः क्रमात् ॥४७॥

तेषां विशेष्यनिघ्नानां द्व्यक्षराणां त्र्यक्षराणां च अन्त्यस्य उकारविशिष्टस्य कवर्गीयाक्षरस्य क्रमेण चवर्गीयाक्षरादेशो भवति॥ निकु। निच्यर्। क्षुद्रत्वम्॥ ट्रंकु। टच्यर्। तैक्ष्ण्यम्॥ ह्रंखु। हछ्यर्। शुष्कता॥ त्र्युखु। त्रिछ्यर्। दक्षता॥ द्रंगु। द्रज्यर्। दुर्लभता॥ स्रंगु। स्रज्यर्। सुलभता॥ निकुशब्दाद्विशेष्यायत्तानामर् (सू० ४१) अनेन ककारस्य चकारः। उवर्णान्तानामिकारः (सू० २।१।३०) यत्वम्। त्र्युखुशब्दोपधायुकारस्य इकारः (सू० २।१।७६)। सर्वत्र यत्वम्॥

## ॥ न च्वंकुखूँखुशब्दयोः ॥४८॥

च्वंकुशब्दखूँखुशब्दसंबन्धिनोः ककारखकारयोश्चवर्गादेशो न भवति ॥ च्वंकु । च्वक्यर् । अम्लत्वम् ॥ खूँखु । खूँख्यर् [। अवनाटवद्वचनम् ] ॥

## ॥ टवर्गान्तानां च ॥४९॥

टवर्गान्तानां विशेष्यनिघ्नानां शब्दानां च क्रमेण चवर्गादेशो भवति ॥ म्वंटु । म्वच्यर् । स्थौल्यम् ॥ गंटु । गच्यर् । अल्पोज्ज्वलता ॥ द्रोंठु । द्राँछ्यर् । कठोरता ॥ यूँठु । यैँछ्यर् । मन्दता ॥ म्वंडु । म्वंज्यर् । कुण्ठता ॥ बंडु । बज्यर् । महत्ता ॥ प्रोणु । प्राञर् । पुराणता ॥

## ॥ तवर्गान्तानामप्रसिद्धः ॥५०॥

तवर्गान्तानां विशेष्यनिघ्नानां शब्दानामन्त्याक्षरस्य क्रमेणाप्रसिद्धश्चवर्गादेशो भवति अप्रसिद्धो दन्त्यः ॥ तंतु । तच़र् । तप्तता ॥ मंतु । मच़र् । मत्तता ॥ वंथु । वछ़र् । विस्तृतता ॥ थंदु । थज़र् । औन्नत्यम् ॥ मंदु । मन्ज़र् । मान्द्यम् ॥ तंनु । तञर् । तनुता ॥ गुमंनु । गुमञार् । ईषन्मालिन्यम् ॥ तमंनु । तमञार् । कार्ष्ण्यम् ॥ तूरंनु । तूरञार् । शीतता ॥ कटमलिनु । कटमलिञार् । धूसरता ॥ पनुनुशब्दस्यादिस्वरस्य दीर्घ इष्यते ॥ पानञार् । आत्मीयता ॥

## ॥ अप्रसिद्धादिलोपः ॥५१॥

अप्रसिद्धाच्चवर्गात् इकारस्य लोपो भवति उदाहरणानि पूर्वसूत्रोक्तानि अप्रसिद्धचवर्गात्परस्य इकारस्य लोपः स्वयं बुद्धिमता निर्णेयः ॥ छ्वंचु । छ्वच़र् । रिक्तता ॥ अंछु । अछ़र् । नैर्बल्यम् ॥ पंजु । पज़र् । सत्यता ॥ अंनु । अञर् । अन्धता ॥

## ॥ लान्तानां जः ॥५२॥

लकारान्तानां विशेष्यनिघ्नानामन्त्यस्य जकारो भवति ॥ खॖलु । खज्यर् । विस्तृतत्वम् ॥ [बॖलु ।] बोज्यर् । चाञ्चल्यम् ॥ कुमुलु । कुमज्यार् । कोमलता ॥ एवं । व्वज़ज्यार् । उज्ज्वलता ॥ म्वकज्यार् । मुक्तता ॥ ज़ाय्ज्यार् । सूक्ष्मता ॥ पिशज्यार् । पेशलता ॥ लान्तानां किम् ॥ बियॖर् । पर्युषितत्वम् ॥ ज़्यॖर् । आधिक्यम् ॥ फह्र्यॖर् । पारुष्यम् ॥ नव्यर् । नवीनता ॥

## ॥ त्रकुरुशब्दस्य च ॥५३॥

अन्त्यव्यञ्जनस्य रकारस्य जकारो भवति ॥ त्रकज्यार् । कठोरता ॥ पक्षे । त्रकॖर्यर् ॥

## ॥ हान्तानां शः ॥५४॥

स्पष्टम् ॥ हिहु । हिश्यर् । सादृश्यम् ॥ ज़ोहु । ज़ाश्यर् । कटुता ॥ हान्तानां किम् । गश्यर् । जालमता ॥ ज़ाष्यर् । कटुत्वम् ॥ फॕरिश्यर् । पारुष्यम् ॥

## ॥ सान्तानां वा छः ॥५५॥

स्पष्टम् ॥ कूँसु । कैँछ़र् । कनिष्ठता ॥ पक्षे ॥ कैँसर् । कनिष्ठता ॥ पवर्गान्तान्युदाहरणानि यथा ॥ पॕपु । पप्यर् । पक्वता ॥ फॕफु । फफ्यर् । लोहलत्वम् ॥ ग्रॕबु । ग्रब्यर् । गुरुत्वम् ॥ ओमु । आम्यर् । आमता । इति ॥

## ॥ बॕडुशब्दादीमी वा ॥५६॥

बॕडुशब्दात्परो विकल्पेन ईमी प्रत्ययो भवति । आदेशाभावश्च ॥ बॕडु । बडीमी । महत्ता ॥ पक्षे । बज्यर् । इति ॥

## ॥ श्रूचुछ्यंटुशब्दाभ्यां यांरू च ॥५७॥

आभ्यां शब्दाभ्यां पक्षे भावे यांरू च भवति ॥ श्रूचु । श्रूच्रियांरू । शुद्धता ॥ छ्यंटु । छ्यंटियांरू । उच्छिष्टता ॥ पक्षे । श्रोच्चर् । छ्यच्चयर् ॥ इति भवतः ॥

## ॥ योरुशब्दान्ताज़् ॥५८॥

योरुशब्दाद्भावविषये ज़् प्रत्ययो भवति ॥ मंज़िमूयार्ज़् । दूतता ॥ पंज़ियार्ज़् । सत्यता ॥ अपंज़ियार्ज़् । असत्यता ॥ यार्ज़् । मित्रता ॥ श्रूच्रियार्ज़् । शुद्धता ॥ छ्यटियार्ज़् । अशुद्धता ॥

## ॥ विशेष्यानायत्तानामिल्आंज़्प्रत्ययौ ॥५९॥

भावे इत्यनुवर्तते स्वयं विशेष्यशब्दानां भावे अभिधेये इल् प्रत्ययः आंज़् प्रत्ययश्च भवति ॥ पंण्डितांज़् । पण्डितता ॥ पक्षे । पंण्डितिल् ॥ छांनिल् । वा । छानांज़् । तक्षकता ॥ गूरिल् । वा । गोरांज़् । पुरोहितता । इत्यादि ॥

## ॥ क्वचिदेकतरः ॥६०॥

क्वचिच्छब्दे एकतर एव प्रयुज्यते ॥ द्वंसिलांज़् । लेपकता ॥ द्वंसिलिल् । इति न साधुशब्दः ॥

## ॥ क्वचिद्युगपच्च ॥६१॥

क्वचित्स्थाने प्रोक्तौ प्रत्ययौ युगपत्प्रयुज्येते ॥ मतिल् । वा । मंतिलांज़् ।

---

[६१ । युगपच्छब्दोऽत्रोभयार्थको ज्ञेयः न तु समवायार्थकः समवेतयोः प्रत्यययोरेकस्माच्छब्दात्प्रयोगासंभवात् ॥]

उन्मत्तता ॥ अत्र मंतुशब्दस्य विशेष्यनिघ्नत्वात्पूर्वं मच्चर् स्वरूपे सिद्धे ऽपि प्रोक्तकर्मार्थमेव पुनरुदाहृतम् ॥ गूरिलांज् । छांनिलांज् । ब्रीठिलांज् । इत्यादि ॥

## ॥ लाँछ्शब्दस्योपधाया ऊत्वं वा ॥६२॥

लूँछिल् । पक्षे । लाँछिल् । नपुंसकता ॥

## ॥ संबन्धिनां तोनु ॥६३॥

नाडसिंबन्धिनां भावे अभिधेये सति तोनु प्रत्ययो भवति ॥ मालितोनु । पितृत्वम् ॥ माजितोनु । मातृत्वम् ॥ बायितोनु । भ्रातृत्वम् ॥ पुतरतोनु । पुत्रत्वम् ॥ हशतोनु । श्वश्रूत्वम् । इत्यादि ॥ कृत्रिमसंबन्धिनां भावे तु तकारस्य पकार इष्यते ॥ व्यसपोनु । वयस्यात्वम् ॥ दायपोनु । धात्रीत्वम् ॥ पाजि-पोनु । नीचत्वम् । इत्यादि ॥

## ॥ शत्रुमित्रपितृर्ऋषिबन्धुभ्य उत् ॥६४॥

एषां शब्दानां भावे गम्यमाने सति उत् प्रत्ययो भवति ॥ शतरुत् । शत्रुत्वम् ॥ म्यत्रुत् । मित्रत्वम् ॥ पितुरुत् । सजातीयत्वम् ॥ ऋष्युत् । ऋषित्वम् ॥ बन्दुत् । बन्धुत्वम् ॥

## ॥ मैत उन् ॥६५॥

शवत्वाचकात् मैतशब्दाद्भावे उन् प्रत्ययो भवति ॥ मैत् । मैतुन् । शवता ॥

## ॥ म्वंड्शब्दादुस् ॥६६॥

विधवात्वाचकात् म्वंड्शब्दाद्भावे उस् प्रत्ययो भवति ॥ म्वंडुस् । वैधव्यम् ॥

## ॥ ह्वुशब्दात्मृगार्थे ॥६७॥

स्पष्टम् ॥ ह्वुस्। मृगः ॥ अन्यत्र। ह्विल्। रजकता ॥

## ॥ स्वन्शब्दाद्दु ॥६८॥

स्पष्टम् ॥ स्वनद्दु। सापत्न्यम् ॥

## ॥ बोजुशब्दाद्दठ् च ॥६९॥

अस्माच्छब्दात् वठ् प्रत्ययो भवति पक्षे द्दु प्रत्ययश्च स्यात् ॥ बांजिद्दु। साधारणता ॥ पक्षे। बांजिवठ्। साधारणता ॥

## ॥ हतादिभ्यः संख्यायाम् ॥७०॥

हत्आदीनां संख्यावाचकानां द्दु प्रत्ययो भवति ॥ हतद्दु। शतशः ॥ सासद्दु। सहस्रशः ॥ लछ्यद्दु। लक्षशः। इत्यादि ॥

## ॥ शाकादिभ्यो मुष्ट्यर्थे ॥७१॥

शाकानां मुष्ट्यभिधेयायां सत्यां द्दु प्रत्ययो भवति ॥ हाकद्दु। शाकमुष्टिः ॥ मुजिद्दु। मूलिकामुष्टिः ॥ ग्वग्जिद्दु [। सर्पपशाकमुष्टिः] ॥

## ॥ उलु ॥७२॥

अधिकारो ऽयम् ॥ इत उत्तरं वक्ष्यमाणार्थेषु उलु प्रत्ययो भवति ॥

## ॥ गाटशब्दान्निपुणे ॥७३॥

स्पष्टम् ॥ गाटलु। निपुणः ॥

## ॥ क्रंडो ऽल्पार्थे ॥७४॥

क्रंड् इति । बृहत्कुण्डं । तस्याल्पार्थे उलु प्रत्ययो भवति । क्रंडुलु । कुंडलाकृतिः ॥

## ॥ गंडो वस्तुसाकल्ये ॥७५॥

वस्तुनः साकल्ये अभिधेये ग्रन्थिवाचकाद्गंड्शब्दात् उलु प्रत्ययो भवति ॥ गंडुलु । वस्तुसामस्त्यम् ॥

## ॥ ग्तुशब्दादतिशये ॥७६॥

नदीप्रवाहवाचकात् ग्तशब्दादतिशये ऽर्थे उलु भवति ॥ ग्तुलु । बहुलम् ॥

## ॥ गदश्च ॥७७॥

स्पष्टम् ॥ गदुलु । बहुलम् ॥

## ॥ टंठुशब्दान्मानावपने ॥७८॥

द्रोणद्वयवाचकात् टंठुशब्दात्परिमाणभाण्डार्थे उलु प्रत्ययो भवति ॥ टठुलु । काष्ठावपनम् ॥

## ॥ द्रंगुप्वंतुशब्दाभ्यां सादृश्ये ॥७९॥

द्रंगु । मुष्टिः ॥ प्वंतु । अर्भकः ॥ आभ्यां सादृश्यार्थे उलु प्रत्ययो भवति ॥ द्रगुलु । पिण्डम् ॥ प्वतुलु । शिलामयी मूर्तिः ॥

## ॥ म्वलसादोस्तद्वति ॥८०॥

स्पष्टम् ॥ म्वलुलु । बहुमूल्यम् ॥ सादुलु । स्वादवान् ॥

॥ कच्छुशब्दाद्भारिके ॥८१॥

स्पष्टम्॥ कच्छुलु। भारवाहः॥

॥ छक्शब्दात्स्पष्टतायाम् ॥८२॥

छक्। शोधना। तस्मात्स्पष्टार्थे उलु प्रत्ययो भवति॥ छकुलु। गद्गदम्॥

॥ चट्शब्दाच्चौरे ॥८३॥

चट्। छदनम्। तस्माच्चौरार्थे उलु भवति॥ चटुलु। चौरः॥

॥ पत्शब्दादुडुपे ॥८४॥

स्पष्टम्॥ पतुलु। उडुपः॥

॥ च्वच्छब्दात्स्वव्यभिचारे ॥८५॥

गुदवाचिनः च्वत्शब्दात्स्वव्यभिचारकारयितरि उलु स्यात्॥ च्वतुलु। स्वव्यभिचारकारयिता। गांडू॥

॥ रात्दुहोस्तत्काले ॥८६॥

रात्दुह्शब्दाभ्यां तत्तत्काले ऽभिधेये उलु प्रत्ययः स्यात्॥ रातुलु। निशाकालः॥ दुहुलु। दिनकालः॥

॥ मून्शब्दाद्वस्त्रे ॥८७॥

उपधाह्रस्वश्च निपात्यते॥ मुनुलु। और्णं वासः॥

॥ युलु ॥८८॥

इत उत्तरं वक्ष्यमाणार्थेषु युलु भवति ॥ अधिकारो ऽयम् ॥

॥ टंपुजटोर्जटाधारिणि ॥८९॥

टंपुशब्दात् जट्शब्दाच्च तद्धारिणो ऽर्थे युलु स्यात्॥ टप्युलु। जटाधारी॥ जट्युलु। जटाधारी॥

॥ दाहः करुणायामुपधाह्रस्वश्च ॥९०॥

स्पष्टम्॥ दह्युलु छुह् वदान। सकरुणं रोदिति॥

॥ रसात्तद्वति ॥९१॥

स्पष्टम्॥ रस्युलु छुह् ग्यवान्। सरसं गायति॥

॥ मछ्स्निहोः स्नेहवति ॥९२॥

मछ् इति। सान्त्वनं। स्निह् इति स्नेहस्तयोः शब्दयोः युलु प्रत्ययो भवति॥ मछ्युलु। सस्नेहः॥ स्निह्युलु। सस्नेहः॥

॥ मिषान्नखमांसलेशे ॥९३॥

स्पष्टम्॥ मिष्युलु। नखमांसलेशः॥

॥ स्यकः स्वादादिसादृश्ये ॥९४॥

स्यक्। सिकता। तत्सादृश्येन स्वादादावभिधेये युलु प्रत्ययः स्यात्॥ स्यक्युलु छुह्। सिकतास्वादसदृशः पालीवतः॥ स्यकिजू बुतराथ्। सैकतिला भूमिः॥

## ॥ मांजूशब्दादपत्रपिष्णौ ॥९५॥

मातृवाचकात् मांजूशब्दात् लज्जावदर्थे पुलु प्रत्ययः स्यात् ॥ माज्युलु । लज्जावान् ॥

## ॥ मलाद्युनु तद्वति ॥९६॥

मलशब्दात्तद्वदर्थे युनु प्रत्ययो भवति ॥ मल्युनु । मलिनः ॥

## ॥ कूटुशब्दादल्पार्थे उनु ॥९७॥

कूटु । वृहत्काष्टं । तस्याल्पार्थे उनु प्रत्ययो भवति ॥ कूटुनु । क्षुद्रकाष्ठम् ॥

## ॥ दगादायुधे ॥९८॥

दग् । घातः । तस्मादायुधार्थे उनु प्रत्ययो भवति ॥ दगुनु । सृगः ॥

## ॥ रंग्स्वन्मन्चम्दाँद्काँद्भ्यः शिल्पिनि र॥९९॥

एभ्यः शब्देभ्यः शिल्पिनि अर्थे र प्रत्ययो भवति ॥ रंग्र् । रजकः ॥ स्वन्र् । स्वर्णकारः ॥ मन्र् । शाङ्खिकः ॥ चम्र् । चर्मकारः ॥ दाँदुर् । शाकविक्रयी ॥ काँदुर् । कान्दविकः ॥

## ॥ डारुफासोर्विनाशकभेदकयोः ॥१००॥

स्पष्टम् ॥ डारुर् । विनाशकः ॥ फासुर् । भेदकः ॥

## ॥ बंगात्तत्पायिनि ॥१०१॥

बंगशब्दात्तत्पायिनि अर्थे र प्रत्ययो भवति ॥ बंगुर् । भङ्गापः ॥

॥ बमो ऽन्तरायिणि ॥१०२॥

बम्शब्दाद्विघ्नकारके ऽर्थे र् प्रत्ययः स्यात् ॥ बम्र् । विघ्नकृत् ॥

॥ लमो विलम्बके ॥१०३॥

लमशब्दाद्विलम्बकर्त्रर्थे र् प्रत्ययो भवति ॥ लम्र् । विलम्बकः ॥

॥ लाबो वार्धुषिके ॥१०४॥

लाबशब्दात् उक्तार्थे र् प्रत्ययः स्यात् ॥ लाब्र् । वृद्धाजीवः ॥

॥ सालो जन्ये ॥१०५॥

साल्शब्दान्निमन्त्रितजन्यार्थे र् प्रत्ययो भवति ॥ साल्र् । जन्याः ॥

॥ लूटो लुण्ठके ॥१०६॥

लूट्शब्दात् लुण्ठकार्थे र् प्रत्ययः स्यात् ॥ लूट्र् । लुण्ठकः ॥

॥ ब्रमो भ्रमप्रदे ॥१०७॥

स्पष्टम् ॥ ब्रम्र् । भ्रमदः ॥

॥ लूबो ऽन्त्यस्य दश्च ॥१०८॥

लूब्शब्दात्तद्वत्त्वार्थे र् प्रत्ययो भवति अन्त्यस्य बकारस्य च दकारो भवति॥ लूद्र् । लोलुभः ॥

॥ तौल्यपरिमिते गुनु ॥१०९॥

तुलया परिमिते वस्तुनि गुनु प्रत्ययो भवति । तच्च द्विधा । एकं स्वयं वस्तु

कियद्स्तीति द्वितीयं कियन्मितस्य वस्तुन आधारभूतमस्तीत्यनयोर्द्वयोरेव योगारम्भः ॥ त्रांक्युनु कठ्। द्रौणिको मेषः ॥ सीर्युनु थाल्। प्रास्थिकः स्थालः ॥ खार्युनु बोरु। खारिको भारः ॥ तांक्युनु नंदु। द्रौणिकः कुम्भः ॥ सीर्युनु बान। प्रास्थिकं भाण्डम् ॥ अत्र त्रख्शब्दस्योपधाया दीर्घः सेर्शब्दस्य एकारस्य ईकारो दृश्यते। प्रस्थवाची सीर्युनु शब्दः पलवाची पल्शब्दापरपर्यायः पल्युनुशब्दश्चेतरावत्रशार्यौ ॥ अन्यत्र। च्वलोकु। चतुर्द्रौणिकः ॥ च्वत्रांक्युनु। चतुर्द्रौणिकः ॥

## ॥ पाँज़ुवुशब्दस्य वस्य शश्च ॥११०॥

द्रोणार्धवाची पाँज़ुवुशब्दस्तत्तौल्येनाभिहिते वस्तुनि युनु प्रत्ययो भवति वकारस्य च शकारो भवति ॥ पाँजशुनु। अर्धद्रौणिकः ॥

## ॥ षष्ट्यादेर्मौल्यसंख्यायां च ॥१११॥

मौल्यसंख्यया वस्तुनि अभिधेये सति षष्टेः परतः युनु प्रत्ययो भवति ॥ शीठ्युनु। षाष्टिकः॥ सतत्युनु। साप्ततिकः॥ षष्ट्यादेः किम्॥ दहन् हेन्दु दांदु। दशानां वृषः ॥

## ॥ सर्वनामशब्देभ्यश्च ॥११२॥

तीत्युनु। तावतिकः ॥ यीत्युनु। यावतिकः ॥ कूत्युनु। कियतिकः ॥ ईत्युनु। एतावतिकः ॥

## ॥ वर्षार्थे च ॥११३॥

वार्ष्युनु। वार्षिकः ॥

## ॥ संख्यायाश्च पूरणे युमु ॥११४॥

संख्यायाः पूरणे ऽर्थे युमु प्रत्ययो भवति चशब्दात्सर्वनामशब्देभ्यश्च ॥ अकयुमु। प्रथमः ॥ दह्युमु। दशमः ॥ वुहयुमु। विंशः ॥ हत्युमु। शततमः ॥ सासयुमु। सहस्रतमः ॥ पुंस्त्रियोः कतिशब्दवाचकाभ्याम् कॅचूकचशब्दाभ्यामपि विज्ञेयः ॥ कच्युमु। कतमः ॥ यीत्युमु। यतमः ॥ तीत्युमु। ततमः ॥ ईत्युमु। इतमः ॥ स्त्रीलिङ्गे तु युकारस्य इकारो भवति ॥ कचिमु। कतमा ॥ यीतिमु। यतमा ॥ इत्यादि ॥

## ॥ अष्टसंख्यावधि शतार्थे हत् ॥११५॥

स्पष्टम् ॥ अख्हथ्। एकशतम् ॥ ज़्हथ्। शतद्वयम् ॥ त्रिहथ्। त्रिशतीं ॥ इत्यादि ॥

## ॥ तत्परतो हस्य शः ॥११६॥

नवसंख्यामारभ्य शतार्थे हकारस्य शकारो भवति ॥ नव्शथ्। नव शतानि ॥ काह्शथ्। एकादश शतानि ॥ बाह्शथ्। द्वादश शतानि ॥ इत्यादि ॥

## ॥ देशभवे इ् प्रत्ययश्च ॥११७॥

स्पष्टम् ॥ सोत्रपुरि नाव्। सुय्यपुरजा नौः ॥ ईरानि गुरु। ईरानदेशजो ऽश्वः ॥ चीनि खोसु [। चीनदेशभवः कंसः] ॥ हिन्दुस्तानि कपुर। इत्यादि ॥

## ॥ कशीर्देशभवे उरु अन्त्यस्वरादिलोपोपधादीर्घौ च ॥११८॥

काश्मीरभाषायां कश्मीरः कशीर इति स्त्रीलिङ्गवाची शब्दः कथ्यते। तस्या उद्भूते वस्तुनि अभिधेये सति उरु प्रत्ययो भवति अन्त्यस्वराद्यवयवस्य लोप

उपधायाश्च दीर्घो भवति ॥ कांशुरु कंग्। काश्मीरं कुङ्कुमम् ॥ कांशुरु पश्मीन। काश्मीरं बहुमूल्यम् [ राङ्कवम् ] ॥ कांशिरु कठ्। काश्मीरं कुष्ठम्। इत्यादि ॥

## ॥ देशकालभवे चोकु अस्त्रियाम् ॥११९॥

देशभवे कालभवे च वस्तुनि अभिधेये उकु प्रत्ययो भवति स्त्रीलिङ्गं वर्जयित्वा ॥ कत्युकु। कुत्रत्यः ॥ तत्युकु। तत्रत्यः ॥ इत्युकु। इहत्यः ॥ यत्युकु। यत्रत्यः ॥ हुत्युकु। अत्रत्यः ॥ गरुकु। गृह्यः ॥ करुकु। किंकालिकः ॥ रातकु। ह्योभवः ॥ परसुकु। परारि भवः। इत्यादि ॥ अज़शब्दादिकारागमश्चेष्यते ॥ अज़्युकु। अद्यतनः ॥

## ॥ मिलोपयुक्तात्पारिप्रत्ययान्तात्सर्वनाम्नो युमु ॥१२०॥

उक्तप्रत्ययो भवतीति स्पष्टम् ॥ पार्युमु। पारदेशजः ॥ कपार्युमु। किंपार्श्वः ॥ तपार्युमु। तत्पार्श्वः ॥ यपार्युमु। यत्पार्श्वः ॥ हुपार्युमु। अपारजः ॥ इपार्युमु। एतत्पार्श्वः ॥ अपार्युमु। पारजः ॥ अस्त्रियां किम् ॥ कतिच्। कुत्रत्या ॥ एवं। पारिम्। पारजा ॥ इत्यादि ॥ दिग्भवे च दछिनुखोवुरुशब्दौ वर्जयित्वा युमु भवति ॥ ब्रॅंठ्युमु। अग्रिमः ॥ पत्युमु। पश्चिमः ॥ हीर्युमु। वा। प्यठ्युमु। ऊर्ध्वः ॥ तल्युमु। वा। ब्वन्युमु। अधरः ॥ अंन्दर्युमु। आन्तरः ॥ न्यंबर्युम्। बाह्यः ॥ अद्रौ प्रोक्तौ किम् ॥ दछिन्युकु। दक्षिणः ॥ खोवर्युकु। वामः ॥

## ॥ समूहे स्यंलु ॥१२१॥

स्पष्टम्। गोवृस्यंलु। गोसमूहः ॥ गुरिस्यंलु। अश्वसमूहः ॥ गुपन्स्यंलु। गोपशुसमूहः ॥ तीरिस्यंलु। मेषादिसमूहः ॥ ज़नानस्यंलु। स्त्रैणम् ॥ महनिविस्यंलु। मानुष्यकम् ॥ इत्यादि ॥

## ॥ लूकूशब्दादय् ॥१२२॥

लूकूशब्दात्समूहे अय् भवति ॥ लूकय् । जनता ॥

## ॥ पानशब्दादुनु उपधाह्रस्वश्च ॥१२३॥

स्पष्टम् ॥ पनुनु । आत्मीयः ॥

## ॥ परशब्दादुदु ॥१२४॥

स्पष्टम् ॥ परुदु । परकीयः ॥

## ॥ तिहादिभ्यः प्रकारोक्तौ थः ॥१२५॥

तिह्यिह्आदिभ्यः पञ्चभ्यः प्रकारवचने गम्यमाने थ प्रत्ययो भवति ॥ तिथ । तथा ॥ यिथ । यथा ॥ क्यथ । कथम् ॥ इथ । इत्थम् ॥ हुथ । इत्थम् ॥

## ॥ उपमाने थु ॥१२६॥

तिह्आदिशब्दैरुपमाने वाच्ये सति थु प्रत्ययो भवति ॥ तिथु । तादृशः ॥ यिथु । यादृशः ॥ किथु । कीदृशः ॥ इथु । एतादृशः ॥ हुथु । ईदृशः ॥ लिङ्गप्रकरणोक्तनिश्चयप्रत्ययान्ताश्च [ सू० २।३।२१ ] यथा ॥ तिथय् । तथैव ॥ यिथय् । यथैव ॥ क्यथय् । कथमेव ॥ इथय् । इत्थमेव ॥ हुथय् । इत्थमेव ॥ एवं बुद्धिमता निश्चयार्थप्रत्ययस्य सर्वत्र प्राप्तिरवधार्या ॥

## ॥ तस्मात्परो पांठि पांठिन् वा ॥१२७॥

तस्मात्प्रकारप्रत्ययान्तात् परः पांठि प्रत्ययः पांठिन् प्रत्ययो वा प्रयोज्यः ॥

तिथपा॑ठि । तथा ॥ यिथपा॑ठि । यथा ॥ क्यथपा॑ठि । कथम् ॥ इथपा॑ठि । इत्थम् ॥ हुथपा॑ठि । इत्थम् ॥ एवं । तिथपा॑ठिन् । यिथपा॑ठिन् । इत्यादि ॥

## ॥ अन्यतो ऽपि च ॥१२८॥

तौ पा॑ठिपा॑ठिन्प्रत्ययौ अन्येभ्यो ऽपि दृश्येते ॥ वियपा॑ठिन् । इतरथा ॥ सारियपा॑ठि । सर्वथा ॥ हे॑लिपा॑ठि । वक्रप्रकारम् ॥ इत्यादि ज्ञेयम् ॥ एवं संबन्धषष्ठ्यन्तेभ्यः सर्वेभ्यः शब्देभ्यो बोध्यम् ॥

## ॥ क्याहो ह्रस्वः ॥१२९॥

क्याह्शब्दस्य ह्रस्वो भवति ॥ क्यथपा॑ठि । कथम् ॥ क्यथताञ्पा॑ठि । केनापि प्रकारेण ॥

## ॥ प्राणिकृतादेशेभ्यो रंग च ॥१३०॥

प्राणिनो द्वितीयादीनामेकवचनेषु [सू० २।३।५] ये तमादय आदेशाः कृतास्तेभ्यः प्रकारवचने गम्यमाने रंग प्रत्ययो भवति चशब्दादन्येभ्यो ऽपि ॥ तमिरंग । तथा ॥ यमिरंग । यथा ॥ कमिरंग । कथम् ॥ इमिरंग । इत्थम् ॥ हुमिरंग । इत्थम् ॥ अमिरंग । इत्थम् ॥ अकिरंग । एकधा ॥ द्वयिरंग । द्विधा ॥ त्र्ययरंग । त्रिधा ॥ सारिरंग । सर्वथा ॥ यञ्निरंग । वा । सिठाहिरंग । बहुधा ॥ इत्यादि ज्ञेयम् । साधनं पूर्ववत् ॥

## ॥ प्रत्ययेषु हलोपः सर्वत्र ॥१३१॥

सर्वत्र लिङ्गप्रकरणे धातुप्रकरणे च प्रत्ययेषु परेषु हकारस्य लोपो भवति ॥ क्यथपा॑ठिन् । कथम् ॥ क्याह्शब्दात् थ प्रत्ययान्तात् पा॑ठिन् प्रत्ययश्च अनेन हकारस्य लोपः । क्याहो ह्रस्व ( सू० १२९ ) इत्यनेनाकारस्याकारः ॥

## ॥ अप्राणिभ्यः स्थाने इ प्रत्ययश्च ॥१३२॥

तेभ्यः अप्राणिकृतादेशेभ्यः सामान्यस्थाने गम्यमाने इ प्रत्ययो भवति ॥ तत्र पञ्चम्यां प्रसिद्धता सप्तम्यां तु पूर्वस्वरस्याप्रसिद्धता ॥ तति। तति। ततः। तत्र ॥ यति। यति। यतः। यत्र ॥ कति। कुतः। कुत्र ॥ इति। इति। अतः। अत्र ॥ हुति। हुति। अमुतः। अमुत्र ॥ अति। अति। अतः। अत्र ॥

## ॥ तस्मादनऽनसौ वा ॥१३३॥

तस्मात् इ प्रत्ययान्ताच्छब्दात् अन् प्रत्ययः अनस् प्रत्ययो वा भवति ॥ कत्यन् वा कत्यनस्। कुत्र ॥ तत्यन् वा तत्यनस्। तत्र ॥ यत्यन् वा यत्यनस्। यत्र ॥ अत्यन् वा अत्यनस्। अत्र ॥ एवमन्यत् ॥ अनसः सकारस्य नकारो ऽपि दृश्यते ॥ यत्यनन्। यत्र ॥ अत्यनन्। अत्र ॥ एवमन्यत् ॥

## ॥ पञ्चम्यां प्यठान्तो ऽपि ॥१३४॥

स एव इ प्रत्ययान्तः शब्दः प्यठान्तो विशेषतः पञ्चमीप्रयोगो भवति ॥ ततिप्यठ। ततः ॥ यतिप्यठ। यतः ॥ कतिप्यठ। कुतः ॥ इतिप्यठ। [illegible] हुतिप्यठ। अमुतः ॥ गरप्यठ। गृहतः ॥ गामप्यठ। ग्रामतः ॥ इत्यादि

## ॥ सप्तम्यामनन्तादी च ॥१३५॥

अनप्रत्ययान्ताच्छब्दात्सप्तम्यां विशेषत ई प्रत्ययो ऽपि भवति ॥ तत्यनी। तत्र ॥ यत्यनी। यत्र ॥ कत्यती। कुत्र ॥ इत्यनी। अत्र ॥ हुत्यनी। अमुत्र ॥

## ॥ ओर्तुप्रत्ययौ वान्त्यलोपश्च ॥१३६॥

तेभ्यः अप्राणिकृतादेशेभ्यः शब्देभ्यः सप्तम्याम् ओर् प्रत्ययः तु प्रत्ययो

था भवति। अन्त्याक्षरस्य च लोपो भवति। तु प्रत्ययस्योकारान्तत्वात्पूर्वस्वरस्या-प्रसिद्धता ज्ञेया ॥ तोर्। तत्र॥ योर्। यत्र॥ कोर्। कुत्र ॥ योर्॥ अत्र॥ होर् वा ओर्। अमुत्र ॥ एवम् ॥ तंतु। यंतु। कंतु। इतु। हुतु। अंतु। विज्ञेयाः ॥ तु प्रत्ययान्तात् त् प्रत्ययश्चेष्यते॥ ततुत्। यतुत्। कतुत्। इतुत्। हुतुत्। अतुत्। इत्यादि ॥ यप्रत्यये ओकारस्य ऊकार इष्यते ॥ तूर्य्। तत्रैव ॥ यूर्य्। यत्रैव ॥ कूर्य्। कुत्रैव ॥ यूर्य्। अत्रैव ॥ ऊर्य्। अमुत्रैव ॥ एवं॥ ततुय्। यतुय्। कतुय्। इतुय्। हुतुय्। अतुय्। बोध्याः ॥

## ॥ पञ्चम्यामपर ओर् ॥१३७॥

अकारः परो यस्मात्तथाविधः ओर् प्रत्ययः पञ्चम्यां भवति॥ तोर। ततः॥ योर। यतः॥ कोर। कुतः॥ होर वा ओर। अमुतः। इति॥

## ॥ तिहादिभ्यः काले ऽलिः ॥१३८॥

तिहादिभ्यः कालविषये अलिप्रत्ययो भवति ॥ त्यलि। तदा ॥ य्यलि। यदा॥ क्यलि। कदा॥ प्रत्ययस्य इदन्तत्वात्पक्षे पूर्वस्वरस्याप्रसिद्धता बोध्या॥ त्य॑लि। य्य॑लि। क्य॑लि। इति॥

## ॥ इहहुहोर्वुञ्व्ञादेशौ ॥१३९॥

अनयोः शब्दयोः सविभक्तिकयोः वुञ् व्ञ् आदेशौ क्रमेण भवतः॥ वुञ्। एतर्हि॥ व्ञ्। अधुना॥

## ॥ क्याहः कर् ॥१४०॥

क्याह्शब्दस्य कालविषये कर् आदेशो भवति॥ कर्। कदा॥

## ॥ उलुक्ताभ्यां रातुद्दह्भ्यामिः ॥१४१॥

स्पष्टम् ॥ रात्लि । नक्तम् ॥ द्दह्लि । दिवा ॥

## ॥ रातः क्तितु च ॥१४२॥

स्पष्टम् ॥ रात्क्तितु । नक्तम् ॥

## ॥ अन्यतो ऽपि च ॥१४३॥

न्यहफ्लि । प्रभातम् ॥ सुलि । अचिरेण ॥ यंचूका़्लि । चिरेण ॥ का़्लि । कालेन ॥ का़्लिक्यथ् । परतरेद्युः ॥ तति़का़्लिक्यथ् । परतरतरेद्युः ॥ कमिविज़ि । कदा ॥ तमिविज़ि । तस्मिन्काले ॥ यमिविज़ि । यस्मिन्काले ॥ इत्यादयो विज्ञेयाः ॥

## ॥ कोज़ुमिम्युज़ुशब्दाभ्यां स् ॥१४४॥

आभ्यां शब्दाभ्यां काले गम्यमाने स् प्रत्ययो भवति ॥ का़जिस् । प्राह्णम् ॥ मिमिज़िस् । अपराह्णम् ॥

## ॥ शेषेभ्यो ऽप्यन् ॥१४५॥

शेषेभ्यो रात्रिदिनविभागेभ्यः अन्येभ्यो ऽपि अन् प्रत्ययो भवति ॥ मन्दिञन् । मध्याह्नम् ॥ दुपहरन् । मध्याह्नम् ॥ कालचनन् । सायम् ॥ बतन्यंगन् वा बतदवन् । नक्तम् ॥ अड्रातन् । अर्धरात्रे ॥ पतिस्पहरन् । रात्रिपश्चाद्यामे ॥ एवमितरभाषाशब्देभ्यो ऽपि व्यवह्रियते ॥ सुब्हन् । प्रभातम् ॥ शामन् । सायम् । इति ॥

## ॥ अः प्रत्यर्थे लिङ्गात्पूर्वः प्रथ् च ॥१४६॥

प्रतिशब्दस्यार्थे गम्यमाने अप्रत्ययो भवति लिङ्गात्पूर्वः प्रथ्शब्दश्च प्रयोज्यः ॥ प्रथ्द्रह । प्रतिदिनम् ॥ प्रथ्रहर । प्रतिप्रहरम् ॥ प्रथ्वरिह्य । प्रतिवर्षम् । इत्यादि ॥

द्वितीयान्तेभ्यः शब्देभ्यो ऽपि दृश्यते ॥ प्रथ्अकिस् । प्रत्येकम् ॥ प्रथ्त्रिज़ि । प्रतिकालम् ॥ प्रथ्महानिविस् । प्रतिपुरुषम् ॥ प्रथ्ज़नानि । प्रतिस्त्रियम् । इत्यादि बोध्यम् ॥

## ॥ द्रहः प्रथ्लोपो वा ॥१४७॥

द्रहशब्दात्पूर्वस्य प्रथ्शब्दस्य लोपो भवति ॥ द्रह । प्रतिदिनम् ॥

## ॥ यप्रत्यये नित्यम् ॥१४८॥

तस्मादेव द्रहशब्दात् यप्रत्यये परे नित्यं प्रथ्शब्दस्य लोपो भवति ॥ द्रहय् । प्रतिदिनमेव ॥ प्रथ्द्रहय् । इति तु न भवति ॥

## ॥ वीप्सायामाद्यात्पथन्वर्थे ॥१४९॥

अनुशब्दस्यार्थे गम्यमाने वीप्सायां द्विरुक्तशब्दस्य आद्यात् पथ् प्रत्ययो भवति ॥ द्रहपथ् द्रह । अनुदिनम् ॥ वरिह्यपथ् वरिह्य । अनुवर्षम् ॥ ज़निपथ् ज़नि । अनुजनम् ॥ इत्यादि ॥

## ॥ इद्रह्वोँठ्शब्दाभ्यां वर्षार्थे उस् ॥१५०॥

स्पष्टम् ॥ इद्रुस् । ऐषमः ॥ वोँठुस् [ । आगामिवर्षे ] ॥

## ॥ पथो रकारश्च ॥१५१॥

पथ्शब्दात् वर्षार्थे उस् प्रत्ययो भवति अन्त्यस्य रकारादेशश्च ॥ परुस् । परारि ॥

## ॥ पूर्वतरार्थे प्ऱ्यादेशः ॥१५२॥

पथ्शब्दात् पूर्वतरवर्षार्थे उस् प्रत्ययो भवति। पथ्शब्दस्य प्ऱारि आदेशश्च॥ प्ऱायुस् । पूर्वतरे वर्षे ॥

## ॥ पञ्चम्यन्ताद्दिगर्थे किनि ॥१५३॥

पञ्चमीप्रत्ययान्तेभ्यस्तदादिशब्देभ्यो दिगर्थे अभिधेये कि़नि प्रत्ययो भवति [सू० १३२] ॥ ततिकि़नि । ततः ॥ यतिकि़नि । यतः ॥ कतिकि़नि । कुतः ॥ इतिकि़नि । इतः ॥ हुतिकि़नि । अमुतः ॥ इत्यादि ॥ ब्रूँठिकि़नि । अग्रतः ॥ पतिकि़नि । पृष्ठतः ॥ दछिनिकि़नि । दक्षिणतः ॥ खोव्रिकि़नि । वामतः ॥ तऺलिकि़नि । अधरस्तात् ॥ प्यठिकि़नि । ऊर्ध्वतः ॥ इत्यादि ॥

एवमितरपञ्चम्यन्तेभ्यो यथा [सू० १३७] । तत्र प्रत्ययाद्येकारस्याकारः अन्त्यस्य तु पूर्णता दृश्यते ॥ तोरकनि । ततः ॥ योरकनि । यतः ॥ कोरकनि । कुतः ॥ ओरकनि वा होरकनि । अमुतः । इतः ॥

प्राणिकृतादेशेभ्यश्च यथा ॥ तमिकनि । तवकनि । ततः ॥ यमिकनि । यवकनि । यतः ॥ कमिकनि । कवकनि । कुतः ॥ इमिकनि । इवकनि । इतः ॥ हुमिकनि । अमिकनि । अवकनि । अतः ॥ एभ्य एव शब्देभ्यो ऽनन्तरवाचकः पतशब्दश्च प्रयोज्यः ॥ तमिपत । ततो ऽनन्तरम् ॥ तवपत । ततो ऽनन्तरम् ॥ इत्यादि बुद्धिमता स्वयं ज्ञेयम् ॥

## ॥ कालार्थे कालवाचिभ्यः ॥१५४॥

अज़्कनि [। अद्य प्रायः] ॥ पगाह्कनि [। श्वः प्रायः] ॥ कालिश्यथ्कनि [। परश्वः प्रायः] ॥ ऊत्रकनि [। परह्यः प्रायः]॥ दहुम्कनि [। दशम्यां प्रायः]॥ हारकनि [। आषाढमासे प्रायः] ॥ इत्यादि ॥

## ॥ अन्येभ्य इ् केवलश्च ॥१५५॥

तदादिशब्दव्यतिरिक्तेभ्यः अन्येभ्यः शब्देभ्यः केवल इ प्रत्ययश्च भवति दिगर्थे गम्यमाने ॥ ब्रूठि। अग्रतः ॥ पति। पृष्ठतः ॥ खोव्रि। वामतः ॥ दछिनि। दक्षिणतः ॥ तलि। अधस्तात् ॥ प्यठि। ऊर्ध्वतः ॥ इत्यादि ॥

## ॥ सर्वेभ्यः पांरि च ॥१५६॥

सर्वेभ्यः प्राणिकृतादेशतदादिभ्यः अन्येभ्यो ऽपि शब्देभ्यो दिगर्थे अभिधेये पांरि प्रत्ययो भवति ॥ कमिपांरि वा कपांरि। कस्मात्पार्श्वतः ॥ तमिपांरि वा तपांरि [। तस्मात्पार्श्वतः ] ॥ यमिपांरि वा यपांरि [। यस्मात्पार्श्वतः] ॥ इत्यादि ॥ हुमिपांरि वा हुपांरि [। अमुष्मात्पार्श्वतः ] ॥ इमिपारि वा इपारि [। अस्मात्पार्श्वतः]॥ अमिपांरि वा अपांरि [। अमुष्मात्पार्श्वतः]॥ दछिनिपांरि [। दक्षिणपार्श्वतः]॥ खोव्रिपांरि। वामपार्श्वतः ॥ ब्रूठिपांरि [। अग्रपार्श्वतः ]॥ पतिमिपांरि [। पश्चात्पार्श्वतः] ॥ इत्यादि ज्ञेयम् ॥

## ॥ चोरो विश्वगर्थे च़ुच़ुवादेशौ च ॥१५७॥

चोरशब्दात्पांरि प्रत्ययो भवति चोरश्च च़्व च़्ववा आदेशौ भवतः ॥ च़्वपांरि वा च़्ववापांरि। विश्वतः ॥ विश्वगर्थे किम् ॥ चोरिपांरि। चतुष्पार्श्वतः ॥

## ॥ सप्तम्यन्तात्कुन् ॥१५८॥

सप्तमीप्रत्ययान्तेभ्यः शब्देभ्यो दिगर्थे गम्यमाने कुन् प्रत्ययो भवति ॥ तोर्कुन् । तस्यां दिशि ॥ योर्कुन् । यस्यां दिशि ॥ कोर्कुन् । कस्यां दिशि ॥ योर्कुन् । अस्यां दिशि ॥ होर्कुन् वा ओर्कुन् । अमुष्यां दिशि [सू० १३६] ॥ एवं । तंतुकुन् । तस्यां दिशि ॥ यंतुकुन् । यस्यां दिशि ॥ कंतुकुन् । [कस्यां दिशि ॥] इतुकुन् । [अस्यां दिशि ॥] हुतुकुन वा अंतुकुन् । [अमुष्यां दिशि] [सू० १३६] । इति ॥ तूर्य्कुन् । [तस्यामेव दिशि ॥] इत्यादयश्चोह्याः ॥ उकाररहितात्प्रत्ययादपि व्यवह्रियते ॥ तथ्कुन् । यथ्कुन् । कथ्कुन् । इथ्कुन् । हुथ्कुन् । अथ्कुन् । इति ॥ यप्रत्ययविशिष्टाश्च यथा ॥ तूर्य्कुन् । यूर्य्कुन् । तथ्य्कुन् । यथ्य्कुन् । इत्यादयः स्वयं विचार्याः ॥ एवं । गाम्कुन् । गरकुन् । कलिकुन् । वारिकुन् । [ह्यरुकुन ।] ह्युरुकुन् । ह्यूरुकुन् । ब्वन्कुन् । इत्यादि ॥ षष्ठ्यन्तलिङ्गादपि प्रयुज्यते ॥ मालिस् कुन् । पितुः पार्श्वे ॥ माज्य कुन् । मातुः पार्श्वे ॥ तमिस् कुन् । तस्य पार्श्वे ॥ यमिस् कुन् । [यस्य पार्श्वे ॥] इत्यादि ॥

## ॥ मयार्थे उवु ॥१५९॥

तन्मयः अस्तीत्यस्मिन्नर्थे उवु प्रत्ययो भवति ॥ स्वनुवु । स्वर्णमयः ॥ म्यछुवु । मृण्मयः ॥ काठुवु । काष्ठमयः ॥ इत्यादि ॥

## ॥ अधीनार्थे बुज्य् ॥१६०॥

तस्याधीनमित्यस्मिन्नर्थे बुज्य् प्रत्ययो भवति ॥ लूकबुज्य् । लोकाधीनम् ॥ खुडबुज्य् । गर्ताधीनम् ॥ कलयबुज्य् । भार्याधीनम् ॥ इत्यादि ॥

## ॥ अडल्यंकुशब्दो विकलार्थे ॥१६१॥

विकले वस्तुनि अभिधेये सति अडल्यंकु शब्दो निपात्यते ॥ अडल्यंकु ।

विकलः ॥ अडल्यंचू कोम्। विकला क्रिया ॥ अडल्यंचू लंरू। विकला शाला ॥ इत्यादि ॥

## ॥ अभ्रधूमवातमात्रायां रिंग् ॥१६२॥

एषां त्रयाणां विकलत्वे मात्रायामभिहितायां सत्यां रिंग् प्रत्ययः स्यात् ॥ अंब्ररिंग्। अभ्रमात्रा ॥ दूहरिंग्। धूममात्रा ॥ वावरिंग्। वातमात्रा ॥ इति ॥

## ॥ प्राणप्रकाशयोर्ल्थ् ॥१६३॥

प्राणप्रकाशयोर्मात्रायामभिहितायां ल्थ् प्रत्ययो भवति। अत्र थकार आदेशकृतो ऽस्तीति ज्ञेयम् ॥ प्राणल्थ्। प्राणमात्रा ॥ शाहल्थ्। श्वासमात्रा ॥ गाशल्थ्। प्रकाशमात्रा ॥ चाँगिल्थ्। दीपमात्रा ॥

## ॥ पटस्य तृर् ॥१६४॥

पटस्य वस्त्रादेर्मात्रायां तृर् प्रत्ययो भवति ॥ कपर्तृर्। कार्पासखण्डः ॥ पट्तिृर्। औ‍र्णखण्डः ॥

## ॥ छल्तिलिमावन्यतश्च ॥१६५॥

वस्त्रादेरन्यस्यापि मात्रायामभिहितायां छल् प्रत्ययः तिलिम् प्रत्ययश्च स्यात् ॥ कपर्तिलिम्। कार्पासखण्डः ॥ च्वच्यतिलिम्। अपूपखण्डः ॥ बुर्जतिलिम्। भूर्जखण्डः ॥ इत्यादि ॥ एवं। कपर्छल्। च्वच्यछल्। बुर्जछल्। पच्यछल्। पट्टीखण्डः ॥ कुंहमाज़्छल्। यकृत्खण्डः ॥ इत्यादि ॥

## ॥ रेम्फ् अल्पकरुणयोः ॥१६६॥

अल्पस्य करुणायाश्चार्थे रेम्फ् भवति ॥ करुणायां यथा । ग़ुरिरेम्फ् । पोतकः ॥ गुरिरेम्फ् । अश्वकः ॥ महनिविरेम्फ् । पुरुषकः ॥ अल्पार्थे यथा । चूँठिरेम्फ् । क्षुद्रपालीवतः ॥ इत्यादि ॥

## ॥ रेँछ् संबन्धस्य ॥१६७॥

संबन्धस्यालपत्वे अभिधेये रेँछ् प्रयुज्यते । संबन्धस्तु वस्त्रादिकस्य वा भवतु जीवस्य वा भवत्विति ॥ कपर्रेँछ् । कार्पासखण्डः ॥ मातामालूरेँछ् छ्यह् । मातामहगृहसंबन्धमात्रास्ति ॥

## ॥ ज़ंड्कांञ्तुलश्च शाककाष्ठयोः ॥१६८॥

शाकानां काष्ठानां च सामान्येन मात्रायामभिहितायां सत्यां ज़ंड् प्रत्ययः कांञ् प्रत्ययो वा तुलु प्रत्ययो वा भवति । चशब्दात् थोपु प्रत्ययश्च स्यात् ॥ हाकज़ंड् । किंचिच्छाकः ॥ काठज़ंड् । किंचित्काष्ठम् ॥ पोषज़ंड् । किंचित्पुष्पाणि ॥ हाककांञ् । काठकांञ् । पोषकांञ् ॥ हाकतुलु । काठतुलु । पोषतुलु । ज़िनितुलु । सिनितुलु । मुज्यतुलु ॥

## ॥ सस्यादीनां फंलु ॥१६९॥

सस्यानां मात्रायां सामान्येन वाच्यायां सत्यां फंलु प्रत्ययो भवति ॥ दाँफंलु [सू० ३।८] । किंचिद्धान्यम् ॥ त्वमुलफंलु । किंचित्तण्डुलः ॥ करफंलु । किंचित्कलायः ॥ म्वंगफंलु । किंचिन्मुद्गः । इत्यादि ॥ आदिशब्दादन्येभ्यो ऽपि ॥ चूञ्फंलु । किंचिदङ्गारः ॥ वंठिफंलु । किंचित्करीषः ॥ म्यच्यफंलु । किंचिन्मृत्तिका ॥ फंलुशब्दस्य बहुत्वनिर्देशतस्तेषां कणा एव निर्णीयन्ते । न तु तेषां

साकल्यम्। यथा ॥ दाँर्फ़लि। धान्यकणाः ॥ त्वम्लर्फ़लि। तण्डुलकणाः ॥ इत्यादि ॥

## ॥ सर्वेभ्यो ऽसस्येभ्यो म्वया हना वा लक्ष्यतः ॥१७०॥

अभ्रादिभ्यः सस्यवर्जितेभ्यः सर्वेभ्यः सामान्येन मात्रायां वाच्यायां म्वया हना वा भवति। लक्ष्यतो व्यवहारानुसारतः। अनयोराशब्दः सामान्यप्रत्ययजो ज्ञेयः ॥ अंब्रम्वया। अंब्रहना ॥ दुह्म्वया। दुहहना ॥ वावम्वया। वावहना ॥ एवं सर्वेषाम् ॥ हाकम्वया। हाकहना। इति पक्वस्यैव ज्ञेयः ॥ हाकतुल्वा। इति पक्वापक्वयोरपि ॥ एवं। पोपम्वया। पोषहना ॥ काष्ठस्य तु न ॥ एवं। च़्ञम्वया। च़्ञहना ॥ म्यच़्यम्वया। म्यच़्यहना ॥ असस्येभ्यः किम्। दाँम्वया। इति न भवति। किंतु। बतर्फ़ल्वा। बतम्वया। बतहना। इत्यस्मिन्सर्वे साधवः। शेषा व्यवहारतो ज्ञेयाः ॥

## ॥ जलस्थानार्थ एव बल् ॥१७१॥

बल् प्रत्ययः जलसंबन्धिस्थानस्यार्थ एव प्रयुज्यते ॥ व्यथबल्। वितस्तास्थानम् ॥ गंगबल्। गङ्गास्थानम् ॥ मा़रबल्। मारी [नदी] स्थानम् ॥ प्वखरिबल्। वापीस्थानम् ॥ क्रूरिबल्। कूपस्थानम् ॥ आवरिञबल्। चितास्थानम् ॥ शिमशानबल्। श्मशानस्थानम् ॥

## ॥ अन्यत्रापि च बलिदानस्थाने ॥१७२॥

यत्र जलदेवायान्यस्मै भूदेवाय भूतादिभ्यश्च बलिः प्रदीयते तत्रापि बल्शब्दः प्रयुज्यते ॥ सबबल्। सभास्थानम् ॥ वुरबल्। वरार्थं यत्र पाकः क्रियते ॥ कोंद-

बल्। इष्टिकापाकस्थानम् ॥ राजबल्। श्मशानस्थानम् ॥ ग्रटबल्। जलघरट्टस्थानम् ॥ इत्यादि ॥

## ॥ वार्शब्दस्य स्नानस्थाने वस्य यः ॥१७३॥

यत्रैव नरैः स्नानं क्रियते तत्रैव देवर्षिपितृभ्यो वारिदानं वितीर्यते इति कश्मीरसंप्रदायः। अतो नद्यादेर्यत्र कुत्रचित्स्थाने स्नानादि क्रियते तत्र वार्शब्दात् बल् प्रत्ययो भवति वकारस्य च यत्वम् ॥ यारबल्। स्नानस्थानम् ॥

## ॥ पैँसयुगले ट्रूँकु ॥१७४॥

ट्रूँकुशब्दो निपात्यते ॥ ट्रूँकु। पणयुगम् ॥

## ॥ तत्परतो हत् ॥१७५॥

त्र्यादिपणानां संख्यायामभिहितायां हत् प्रत्ययः स्यात् ॥ त्रिहथ्। पणत्रयम् ॥ च़ोहथ्। पणचतुष्कम् ॥ पाँच़्हथ्। पणपञ्चकम् ॥ परंतु यथा पूर्वोक्तसूत्रेषु शतसंख्यायां नवभ्यः शत् इति व्यवह्रियते [सू० ११९ इत्यादि] तथैवात्रापि विज्ञेयम् ॥ नव्शथ्। पणनवकम्। इत्यादि ॥ किंतु वणिग्जनैः पणदशकस्यापि सहस्रवाची सास्शब्दः परिभाष्यते ॥

## ॥ शतावधि जनसंख्यायां जंनुशब्देनैव संख्यासमासः ॥१७६॥

जनसंख्यायां वाच्यायां सत्यां जंनुशब्दादेव पूर्वमुत्तरं वा संख्याशब्दाः संगन्तव्याः ॥ जंनि पंचाह्पर [सू० २।३।४४]। पञ्चाशज्जनाः ॥ शेठ् जंनि। षष्टिजनाः ॥ इत्यादि ॥

## ॥ लूक्‌शब्देन शतादिषु ॥१७७॥

जनानां शतसहस्रादिसंख्यायां वाच्यायां लूक्‌शब्देन संख्याशब्दाः पूर्व-मुत्तरं वा संधेयाः॥ हथ् लूक। शतं जनाः॥ ज़्हृहथ् लूक। जनानां द्विशती॥ त्रिहथ् लूक[। जनानां त्रिशती]॥ इत्यादि॥ हथ् ज़नि। शतं जनाः॥ सास् ज़नि।[सहस्रं जनाः॥] इति च कदाचिद्व्यवह्रियते तदल्पत्वाद्गौणमेव बोध्यम्॥

## ॥ त चार्थे ॥१७८॥

चशब्दस्यार्थे त भवति॥ सुह् त ज़्ह्। स च त्वम्॥

## ॥ अपिशब्दार्थे ति ॥१७९॥

स्पष्टम्। बहुवचनेषु तशब्दस्थाने तिशब्द एव प्रयुज्यते॥ सुह् ति ज़्ह् ति। सोऽपि त्वमपि॥ महनिवि ति गुपन् ति आय्। नराश्च पशवश्चागताः॥ न तु महनिवि त गुपन् त आय्। इति भवति॥

## ॥ बियं पुनरपरार्थे ॥१८०॥

पुनः शब्दस्यार्थे बियशब्दः स्यात् अपरार्थे च॥ बिय कीगिज़्। पुनः कुर्याः॥ बिय वति। अपरमार्गेण॥

## ॥ इवार्थे ज़न् ॥१८१॥

इवशब्दस्यार्थेऽत्र ज़न्‌शब्दो भवति॥ तोत ज़न् छुह् परान्। शुक इवाधीते॥ मालिस् ज़न् छुह् रछान्। पितेव रक्ष्यते॥

## ॥ सादृश्यार्थे ह्युहु ॥१८२॥

स्पष्टम् ॥ मॉलिस् ह्युहु [वा हिहु]। पितृसंनिभः ॥ समासे तु। मोलु ह्युहु छुस्। सः पितृसंनिभस्तस्यास्ति ॥ स्वन् ह्युहु छुह् नाँपान्। स्वर्ण इव दीप्यते। इत्यादि ॥

## ॥ निर्धारणे च ॥१८३॥

स्पष्टम्। बुडु ह्युहु अ़निज़्यन्। वृद्धमिव समानयेः ॥ नात्र को ऽपि वृद्धसदृशो नरो ऽवगम्यते। किंतु। य एव वृद्धो भवेत्तमेवानयेरित्यवधार्यम् ॥

## ॥ अन्यप्राधान्ये सहार्थे सूंत्य् ॥१८४॥

इतरस्य प्राधान्ये सति तेनैव साकं सहार्थे अभिधेये सूंत्य् प्रत्ययो भवति। वा सूंतिन् शब्दो भवति [सू० ४।१।६०]। सहार्थतृतीयायां विकल्पकथनात् ॥ मॉलिस् सूंत्य् आव्। पित्रा सहागतः॥ अत्र पितैव प्रधानः पुत्रस्तु तत्साहित्येनैवागमनकारी ॥

## ॥ स्वप्राधान्ये सान् ॥१८५॥

आत्मनः क्रियाप्राधान्ये सतीतरस्य सहार्थे अभिधेये सान् प्रत्ययः ॥ मॉलिस् सान् आव्। सतात आयातः ॥ अत्र पुत्र एव प्रधान्येनागमकृत् तातस्तु गौणतया तत्साहित्येनोद्दिष्ट इत्यादि स्वयमूह्यम् ॥

## ॥ द्व्यादिभ्यः पञ्चभ्यो युगपदर्थे शवय् ॥१८६॥

द्विवाचकात् ज़ुह्शब्दादारभ्य पञ्चभ्यः संख्याशब्देभ्यो युगपदर्थे शवय् प्रत्ययो भवति। पाँच्शब्दाच्छकारलोपः ॥ द्वशवय्। द्वावेव ॥ त्र्यशवय्। त्रय एव ॥ च़्वशवय्। चत्वार एव ॥ पाँचवय्। पञ्चैव ॥ पशवय्। षडेव ॥

## ॥ नवय् वापाँच्भ्यः ॥१८७॥

एभ्यो ऽपाँच्भ्यः पाँच्शब्दवर्जितेभ्यो युगपदर्थे विकल्पेन नवय् वा प्रत्ययो भवति ॥ द्वनवय्। द्वावेव ॥ त्र्यनवय्। त्रय एव ॥ च़्वनवय्। चत्वार एव ॥ षनवय्। षडेव ॥ अपाँच्भ्यः किम्। पाँच़वय्। पञ्चैव ॥

## ॥ सप्तादिभ्यो वय् ॥१८८॥

सप्तादिसंख्यायाः साकल्येनार्थे गम्यमाने वय् प्रत्ययो भवति ॥ सतवय्। सप्तैव ॥ ऐठवय्। अष्टावेव ॥ नववय्। नवैव ॥ इत्यादि ॥ अत्रेदं ध्येयम्। वय्प्रत्ययान्तेभ्यो द्वितीयायां षष्ठ्यां च नी प्रत्ययो यलोपश्च स्यात्। कर्तृतृतीयायां तु इ प्रत्ययः। वय्शब्दात्पूर्वं च विकल्पेन वकारागम इति च ॥

## ॥ आद्यखण्डवीप्सापूर्वाः प्रथमे वा ॥१८९॥

प्रथमे द्वशवय् इत्याद्या आद्यखण्डस्य द्वश् त्र्यश् इत्यादिकस्य वीप्सापूर्वा युगपदर्थे वा कथ्यन्ते ॥ द्वशि द्वशवय्। द्वावेव ॥ त्र्यशि त्र्यशवय्। त्रय एव ॥ च़्वशि च़्वशवय्। चत्वार एव ॥ पूँचि पाँच़वय्। इत्यादि ॥

## ॥ चोरश्चादेशो दशभ्यश्च ॥१९०॥

चोर्शब्दस्यात्रापि दशसंख्यापरतश्च च़्व आदेशो भवति ॥ च़्वशवय्। चत्वार एव ॥ च़्वदाह्। चतुर्दश ॥ च़्वुह्। चतुर्विंशतिः ॥ इत्यादि ॥

## ॥ कुनु एककार्थे ॥१९१॥

[illegible]ार्थे कनुशब्दो निपात्यते। कुनु। एककः ॥

## ॥ हंरुजोरौ युगलार्थे ॥१९२॥

तत्र हंरुशब्दः प्रायशो प्राणिव्यतिरिक्तवस्तुन्येव प्रयुज्यते ॥ यथा। ड्यज्य-हंरु। ताटङ्कयुगलम् ॥ दूरहंरु। कर्णिकायुगम् ॥ वांलिहंरु। कुण्डलयुगम् ॥ पुलहंरु। तृणपादुकायुगम् ॥ खावहंरु। काष्ठपादुकायुगम् ॥ इत्यादि ॥ ग्राम्य-जनैस्तु। दाँदहूरि। वृषयुगम् ॥ इति शब्दो ऽपि भाष्यते। जोर्शब्दस्तु प्रायः प्राणिविषये प्रयुज्यते क्वचिदप्राणिविषये च। यथा हूरिशब्दस्तथा जूरिशब्द-श्चावधार्यः ॥ म्वक्तजूरि। मुक्तायुगम् ॥ दाँदजूरि। वृषयुगम् ॥ कोतर्जूरि। कपोतयुगम् ॥ गुंरिजूरि। अश्वयुगम् ॥ अख्जोर। एकं युगम् ॥ ज़ुह्जोर। युगद्वयम् ॥ त्र्यह्जोर। युगत्रयम् ॥ इत्यादि ॥ अख्हंरु। एकं युगम् ॥ ज़ुह्-हंरि। युगद्वयम् ॥ त्र्यह्हंरि। युगत्रयम् ॥ इत्यादि सर्वं बुद्धिमता स्वयमूह्यम् ॥ त्र्यादिदशावधिसंख्यानामेकत्वेन त्रिच च़ाक् पंज़ु पक संतु ऐठि नंमु दंहु शब्दाः क्रमेण निपातनादेव विचारणीयाः॥ त्रिच। त्रयम् ॥ च़ाख्। चतुष्कम् ॥ पंज़ु। पञ्चकम् ॥ पक। षट्कम् ॥ संतु। सप्तकम् ॥ ऐठि। अष्टकम् ॥ नंमु। नवकम् ॥ दंहु। दशकम् ॥ इत्यादि ॥

## ॥ किंचिदर्थे पहान् ॥१९३॥

विशेष्यस्य वस्तुनः किंचिद्विशेषणार्थे वाच्ये पहान् शब्दः अग्रे प्रयोज्यः॥ बंडु पहान्। किंचिन्महान् ॥ व्यंठु पहान्। किंचित्स्थूलः ॥ वुषुण् पहान्। किंचिदुष्णः। इत्यादि ॥ दिग्देशकालवाचिभ्यश्च शब्देभ्यो ऽग्रे प्रयोज्यः ॥ दूर् पहान्। किंचिद्दूरम् ॥ न्यूर् पहान्। किंचित्समीपम् ॥ ब्रोंठ् पहान्। किंचि-त्पूर्वम् ॥ पथ् पहान्। किंचित्पश्चात् ॥ च़ीरि पहान्। किंचिच्चिरेण ॥ कांशुरु पहान्। किंचित्कश्मीरदेशजः॥ बंगालुकु पहान्। किंचिद्बंगालदेशजः॥ उहुर्युंदु पहान्। यहुर्युंदु पहान्। इत्यादि विज्ञेयम् ॥

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते
तद्धितप्रक्रिया समाप्ता ॥४॥

## अथ अव्ययप्रक्रिया ॥५॥

### ॥ क्रियासंबन्धिनो ऽव्यया नित्यम् ॥१॥

ये अव्ययशब्दास्ते नित्यं क्रियासंबन्धिनो भवन्ति ॥ यद्वैन करव्। यदि कुर्याः ॥

### ॥ धातुभ्य आनव्यये ॥२॥

क्रियासंबन्धिनि अन्यधात्वर्थे अभिधेये सति तस्माद्धातोः आन् प्रत्ययो भवति स चाव्ययः ॥ व्यठान् आव्। स्थूलमागतः ॥ स्थूलं यथा स्यात्तथा आगत इत्यर्थः ॥

### ॥ वीप्सया वा ॥३॥

स्पष्टम् ॥ व्यठान् व्यठान् गौव्। स्थूलं स्थूलं गतः ॥

### ॥ स्वरान्ताद्वान् ॥४॥

स्वरान्ताद्धातोरव्यये वान् प्रत्यय इष्यते ॥ ख्यवान् ख्यवान्। खादन् [illegible] ॥

## ॥ लिङ्गाभीक्ष्ण्येन च ॥५॥

यस्यैव विशेषणरूपस्य लिङ्गस्य क्रियासंबन्धः स्यात्तस्य शब्दस्य आभीक्ष्ण्येन द्विरुक्तेन क्रियासंबन्धी अव्ययः स्यात् चशब्दात्केवलेनापि ॥ च़ेतुर् च़ेतुर् । शीघ्रं शीघ्रम् ॥ ल्वंतु ल्वंतु । मन्दं मन्दम् ॥ पक्षे । लवति लवति ॥ ग्वंबु ग्वंबु छुह् पकान् । गुरु गुरु चलति ॥ केवलेनापि यथा ॥ च़ेतुर् ख्यवान् छुह् । चतुरमत्ति ॥ ल्वंतु करान् छुह् । लघु करोति ॥ ग्वंबु पकान् छुह् । गुरु गच्छति ॥

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते
अव्ययप्रक्रिया समाप्ता ॥

# अथ स्त्रीप्रत्ययप्रकरणम् ॥६॥

## ॥ स्त्रियाम् ॥१॥

अत्राधिकारे ये वक्ष्यमाणाः प्रत्ययास्ते स्त्रियामेवेत्यधिक्रियते ॥

## ॥ मनुष्यजातेः सर्वत्र बाय् ॥२॥

जातिर्द्विविधा एका साम्प्रदायिका अन्या शिल्पवशात्स्वर्णकाराद्या जातिर्लोके प्रोच्यते । न चात्र पशुपक्ष्यादीनां जातिर्गृह्यते मनुष्यशब्दस्य सूत्रे नियमात् । तयोर्द्वयोरेव जात्योः स्त्रीशब्दे अभिधेये सति बाय् प्रत्ययो भवति ॥ दरबाय् । कौलबाय् । इत्यादि ॥ बटबाय् । आर्य स्त्री ॥ स्वन्र्बाय् । स्वर्णकारस्त्री ॥ खारबाय् । लोहकारस्त्री । इत्यादि ॥ मनुष्यजातेः किम् ॥ कोतर्बाय् । कोतर्नाम्नी जातिस्तत्संबन्धिनी स्त्री । न तु कपोतस्त्री तत्र । कोतरु इति भवति ॥

## ॥ अनादरार्थे कलय् ॥३॥

मनुष्यजातिवाचकाच्छब्दादनादरेण स्त्रीशब्दे अभिधेये कलय् प्रत्ययो भवति ॥ बटकलय् । ब्राह्मणस्त्री ॥ छानकलय् । तक्षकस्त्री ॥ अत्र यद्यपि कलय्- [illegible] भार्यार्थवाची वर्तते परंतु समासेनानादरार्थो ऽवगम्यते ॥

## ॥ सर्वेषामुकारान्तानामूकारादेशः ॥४॥

सर्वेषां विशेष्यशब्दानां विशेषणशब्दानां चोकारान्तानां स्त्रीलिङ्गविषये ऊ-मात्रादेशो भवति ॥ पंटु । पंटू । पट्टिका ॥ म्वंटु । म्वंटू । स्थूला॥ गंरु । गंरू । कठिना ॥ गुरु । गुरू । अश्वा ॥ द्वंबु । द्वंबू । रजकी ॥ वोवुरु । वोवरू [सू० ८] । तन्तुवाया ॥ गगुरु । गगरू [सू० ८] । मूषका ॥ पक्षे मनुष्यजातेः । द्वंबिबाय् । वोव्रिबाय् ॥

## ॥ वा छ्वंटुशब्दात् ॥५॥

स्पष्टम् ॥ छ्वंटु । छ्वंटू । ह्रस्वा ॥ पक्षे । छ्वटिञ् । इति मनुष्यजातेरेव ॥

## ॥ खरश्च ॥६॥

खर्शब्दात्स्त्रीलिङ्गविषये विकल्पेन ऊमात्रागमो भवति ॥ खंरू । खरी ॥ पक्षे । खरिञ् ॥

## ॥ लान्तानां जः ॥७॥

उकारविशिष्टानां लकारान्तानां लकारस्य जकारादेशो भवति ॥ वोलु । वांजू । [ ऊर्मिका ] कुण्डलिका ॥ डुलो ऽन्त्यात् लि आगम इष्यते ॥ डुलु । डुलिजि । कुण्डलिका ॥

## ॥ त्र्यक्षरादीनामुलोप उलोश्च ॥८॥

त्र्यक्षरादिकानां शब्दानां उलु प्रत्ययसंबन्धिन उपधाया उकारस्य लोपो भवति ॥ गाटुलु । गाट्जू । दक्षा ॥ फुटुलु । फुट्जू । पोटलिका ॥ चकुलु । चक्जू । चक्रिका ॥ पतुलु । पत्जू । उडुपिका ॥ ग्वगुलु । ग्वग्जू । [ग...] च्वतुलु । च्वत्जू । व्यभिचारिणी ॥ वातुलु । वात्जू ।

टट्ज़ू । काष्ठपात्रिका ॥ त्र्यक्षरादिकानां किम् ॥ गुंरू । अश्वा ॥ गूरु । गूरू । [गोपालिका ॥] खेरु । [खलतिः ॥] खेरू [। रोग विशेषः ] ॥ उलोः किम् । चूोलु । चूांजू ॥ मोलु । मांजू ॥ गूलु । गूजू ॥

## ॥ कवर्गान्तानां चवर्गः ॥९॥

उकारविशिष्टानां केवलानां च कवर्गान्तानां पुंलिङ्गानां स्त्रीलिङ्गविषये चवर्गादेशो भवति ॥ बतुकु । बत्चू । वर्तिका ॥ हंखु । हंछू । शुष्का ॥ ड्यूँगु । डीँजू ॥ सूत्रादिगुटिका ॥

## ॥ न खूंखुच्वकोः ॥१०॥

स्पष्टम् ॥ खूँखु । खूँखू [। अवटीटा] ॥ च्वकु । च्वकू । अम्ला ॥

## ॥ तवर्गान्तानामप्रसिद्धः ॥११॥

स्पष्टम् ॥ मंतु । मंचू । उन्मत्ता ॥ कंथु । कंछू । भारिका ॥ व्वरुदु । व्वरूजू । पुनर्भूः ॥ वन् । वंञ् । वन्या ॥ गान् । गांञ् । वेश्या ॥ छान् । छांञ् ॥ तक्षकी ॥ हूनु । हूञ् । शुनी ॥ एवं सर्वत्र ॥

## ॥ कंगो ऽल्पार्थे राकारश्च ॥१२॥

कंग् बृहदङ्गारधानिका । तस्मादल्पार्थे र् प्रत्ययो भवति आकारश्च भवति ॥ काँग्र् । हसन्तिका ॥

## ॥ चा़सः कृत्रिमे सस्य च खः ॥१३॥

[illegible] सहजकासस्तस्मात्कृत्रिमे ऽर्थे र् प्रत्ययः सकारस्य च खकारो [illegible] कृत्रिमकासः ॥

## ॥ त्रकस्तुलायाम् ॥१४॥

तुलाया अर्थे त्रक्शब्दात् र् प्रत्ययो भवति ॥ त्रख्। द्रोणः ॥ त्रकर्। तुला ॥

## ॥ म्वंडुशब्दस्यान्त्यस्वरलोपः ॥१५॥

म्वंडु वृहत्काष्ठम्। तस्मादल्पस्यार्थे र् प्रत्ययो भवति। अन्त्यस्वरस्य च लोपो भवति ॥ म्वंडु। म्वंड्र्। अल्पकाष्ठम् ॥

## ॥ फ्वंतुशब्दस्य च ॥१६॥

र्प्रत्ययान्त्यस्वरलोपौ भवतः ॥ फ्वंतु। फ्वत्र्। कटोलिका ॥

## ॥ लटोश्च ॥१७॥

लंटु पुच्छस्तस्मादल्पस्यार्थे र्प्रत्ययान्त्यस्वरलोपौ भवतः ॥ लंटु। लट्र्। पुच्छिका ॥ तत्सादृश्ये ऽपि व्यवह्रियते। कूटि लट्र्। क्षुद्रकाष्ठम् ॥

## ॥ मक्शब्दाच्च्प्रत्ययः ॥१८॥

मख् परशुस्तस्मादल्पार्थे च़ प्रत्ययो भवति ॥ मक्च्। परश्वधिका ॥

अल्पार्थे कृत्रिमार्थे च स्त्रीलिङ्गोद्देशके ऽपि च।
सादृश्ये स्वविशेषे ऽर्थे स्त्रीलिङ्गप्रत्ययाः खलु ॥

अल्पार्थे यथा। कतुरु। कपालः ॥ कत्रू। कपालिका ॥ कृत्रिमार्थे यथा। च़ाखर्। कृत्रिमकासः ॥ वस्तुनः सजीवस्य निर्जीवस्य वा स्त्रीलिङ्गेनोद्देशे कर्तव्ये सति स्त्रीप्रत्ययो भवति ॥ म्वंगुरु। छागपोतः ॥ म्वंग्रू। छागपोता ॥ वतसः ॥ वछर्। वत्सा ॥ न चात्र वत्सस्य स्त्री वत्सा इत्य[illegible]

शब्दस्य पुंलिङ्गस्य स्त्रीलिङ्गेन निर्देशः ॥ सादृश्ये यथा ॥ कंथु। कंछू ॥ ततुरु। पीडा ॥ ततरू। कांपपीडा ॥ स्वविशेषे ऽर्थे यथा ॥ नंरु। वस्त्रभुजः ॥ नंरू। भुजः ॥ अत्र नंरूशब्दस्य स्वयं स्त्रीलिङ्गत्वान्नालपत्वाद्यर्थग्रहः किंतु वस्त्रभुजस्याधारार्थे ऽत्र स्त्रीलिङ्गोद्देशः। यद्वा परस्परं विनिमयोपशमाद्यत्राद्यः शब्दः पुंलिङ्गो भवति तत्र तत्संबन्धिनो ऽन्यशब्दस्य स्त्रीलिङ्गेनोद्देशः क्रियते। यत्र तु स्त्रीलिङ्गस्तत्र पुंलिङ्गोद्देशः ॥ नंरु। नंरू ॥ खंरु। खंरू। खलतिः ॥

## ॥ हंस्तुशब्दान्नित्यमिङ् ॥१९॥

उकारान्तत्वात् ऊमात्रादेशनिवृत्त्यर्थं नित्यमिङ् प्रत्ययो भवति ॥ हस्तिङ्। हस्तिनी ॥

## ॥ काव्नाग्वूँट्भ्यश्च ॥२०॥

एभ्यः शब्देभ्यो नित्यमिङ् भवति ॥ कांविङ्। काकी ॥ नांगिङ्। नागा ॥ वूँटिङ्। उष्ट्रा ॥

## [illegible]ो ऽपि पशुजातेः ॥२१॥

[illegible]२॥

## ॥ ब्वटशब्दात्स्त्रियाम् ॥२३॥

स्त्रीलिङ्गविषये इञ् भवति न निन्दार्थे ॥ ब्वटिञ् । [बुटिञ् ।] ब्वटजातिः स्त्री ॥ पक्षे । ब्वटथाय् ॥

## ॥ बुगियूशब्दाद्यलोपश्च ॥२४॥

बुगियू स्वामी तस्मादिञ् प्रत्ययो भवति । यकारस्य च लोपो भवति ॥ बुगिञ् । स्वामिनी ॥

## ॥ ज़लात्पादनिदाघे ॥२५॥

ज़लशब्दात्पादस्वेदार्थे इञ् भवति ॥ ज़लिञ् । पादस्वेदः ॥

## ॥ गराद्गृहसंस्कारे ॥२६॥

गृहसंस्कारे ऽभिधेये गरशब्दात्स्त्रियामिञ् भवति ॥ गरिञ् । गृहसंस्कारिणी ॥ अन्यत्र । गर्वाज्यञ् । गृहिणी ॥

## ॥ ह्वबुशब्दा

स्पष्टम् ॥ ह्वबिञ् । सृ

## ॥ वोलुप्रत्ययान्तान्नित्यम् ॥२९॥

स्पष्टम् ॥ गर्वाज्यञ्। गेहिनी ॥ न तु गर्वोलुशब्दस्य उकारान्तत्वात् ऊमात्रादेशः स्यान्नित्यग्रहणात् ॥ प्रत्ययान्तात्किम्। वोलु। वांजू ॥

## ॥ प्रत्ययादेर्यो रान्तेभ्यः ॥३०॥

रकारान्तेभ्यः शब्देभ्यः प्रत्ययादिवर्णस्य यकारो भवति ॥ सालर्यञ्। अतिथिस्त्री ॥ प्वहर्यञ्। गृहागता ॥ रंग्र्यञ्। रजकस्त्री ॥ स्त्रन्र्यञ्। स्वर्णकारस्त्री ॥ दाँद्र्यञ्। शाकविक्रेत्री ॥ काँद्र्यञ्। आपूपिकी ॥ स्त्रङ्यञ्। पुत्रश्वश्रूः ॥ महार्यञ्। महाराजस्त्री। वधूः ॥ राज्यर्यञ्। देवी। राजस्त्री ॥

## ॥ पण्डितगुजरयोरां ॥३१॥

आभ्यां शब्दाभ्यां प्रत्ययादिवर्णस्य अप्रसिद्ध आकारो भवति ॥ पंडितांञ्। पण्डितस्त्री ॥ गुजरांञ्। जावालस्त्री ॥

इति श्रीशारदाक्षेत्रभाषाव्याकरणे कश्मीरशब्दामृते

॥६॥

# अथाख्यातप्रक्रियायाम् ॥७॥

## धातु पाठः ॥१॥

धातवो ऽन्योन्यसांकर्यात्कथ्यन्ते दोपसंज्ञया ।
ते दोपज्ञेन शोध्यन्ते सांकर्याच्च विकीर्णनात् ॥ १ ॥
तथा गिरं प्रणम्यादौ शारदाक्षेत्रधातवः ।
संकीर्णाश्च विकीर्णाश्च ग्रथ्यन्ते यत्नतो मया ॥ २ ॥

तत्र येषां धातूनामतीतकाले केवलं कर्मप्रयोगा॰ ...
संपद्यन्ते तेषां संकेतो यथा
कर्तृप्रयोगिनो भवन्ति ॥

व॰